# ॥ श्रीलाकिनीसहस्रनामस्तोत्रम् ॥

श्रीगणेशाय नमः ।
आनन्दभैरवी उवाच ।
अथ सम्भेदनार्थाय वक्ष्ये षट्पङ्कजस्य च ।
महारुद्रस्य देवस्य श्री श्रीमृत्युञ्जयस्य च ॥ १॥

लाकिनी शक्तिसहितं सहस्रनाममङ्गलम् ।
अष्टोत्तरशतव्याप्तं निगूढं भव सिद्धये ॥ २॥

धारयित्वा पठित्वा च श्रुत्वा वा नाममङ्गलम् ।
शृणुष्व परमानन्द योगेन्द्र चन्द्रशेखर ॥ ३॥

तवाह्लादप्रणयनात् सर्वसम्पत्तिप्राप्तये ।
मणियोगसुसिद्ध्यर्थं सावधानाऽवधारय ॥ ४॥

अष्टोत्तरसहस्रनाममङ्गलस्य कहोड
ऋषिर्गायत्रीच्छन्दो महारुद्रमृत्युञ्जयलाकिनी सरस्वतीदेवता
सर्वाभीष्टशचीपीठयोगसिद्ध्यर्थे विनियोगः ।
ॐ मृत्युञ्जय रुद्रादि लाकिन्यादि सरस्वती ।
मृत्युजेता महारौद्री महारुद्रसरस्वती ॥ ५॥

महारौद्रो मृत्युहरो महामणिविभूषिता ।
महादेवो महावक्त्रो महामाया महेश्वरी ॥ ६॥

महावीरो महाकालो महाचण्डेश्वरी स्नुषा ।
महावातो महाभेदो वीरभद्रा महातुरा ॥ ७॥

महाचण्डेश्वरो मीनो मणिपूरप्रकाशिका ।
महामत्तो महारात्रो महावीरासनस्थिता ॥ ८॥

मायावी मारहन्ता च मातङ्गी मङ्गलेश्वरी ।
मृत्युहारी मुनिश्रेष्ठा मनोहारी मनोयवा ॥ ९॥

मण्डलस्थो मनीलाङ्गो मान्या मोहनमौलिनी ।
मत्तवेशो महाबाणो महाबला महालया ॥ १०॥

मारी हारी महामारी मदिरामत्तगामिनी ।

महामायाश्रयो मौनी महामाया मरुत्प्रिया ॥ ११॥

मुद्राशी मदिरापी च मनोयोगा महोदया ।
मांसाशी मीनभक्षश्च मोहिनी मेघवाहना ॥ १२॥

मानभङ्गप्रियो मान्या महामान्यो महाबला ।
महाबाणधरो मुख्यो महाविद्या महीर्यसी ॥ १३॥

महाशूलधरोऽनन्तो महाबली महाकुला ।
मलयाद्रिनिवासी च मतिर्मालासनप्रिया ॥ १४॥

मायापतिर्महारुद्रो मरुणाहतकारिणी ।
मालाधारी शङ्खमाली मञ्जरी मांसभक्षिणी ॥ १५॥

महालक्षणसम्पन्नो महालक्षणलक्षणा ।
महाज्ञानी महावेगी मौषली मुषलप्रिया ॥ १६॥

महोख्यो मालिनीनाथो मन्दराद्रिनिवासिनी ।
मौनीनामन्तरस्थश्च मानभङ्गा मनःस्विनी ॥ १७॥

महाविद्यापतिर्मध्यो मध्ये पर्वतवासिनी ।
मदिरापो मन्दहरो मदनामदनासना ॥ १८॥

मदनस्थो मदक्षेत्रो महाहिमनिवासिनी ।
महान् महात्मा माङ्गल्यो महामङ्गलधारिणी ॥ १९॥

महाहीनशरीरश्च मनोहरतदुद्भवा ।
मायाशक्तिपतिर्मोहा महामोहनिवासिनी ॥ २०॥

महच्चितो निर्मलात्मा महतामशुचिस्थित ।
मत्तकुञ्जरपृष्ठस्थो मत्तकुञ्जरगामिनी ॥ २१॥

मकरो मरुतानन्दो माकरी मृगपूजिता ।
मणीपूज्या मनोरूपी मेदमांसविभोजिनी ॥ २२॥

महाकामी महाधीरो महामहिषमर्दिनी ।
महिषासुरबुद्धिस्थो महिषासुरनाशिनी ॥ २३॥

महिषस्थो महेशस्थो मधुकैटभनाशिनी ।
मधुनाथश्च मधुपो मधुमांसादिसिद्धिदा ॥ २४॥

महाभैरवपूज्यश्च महाभैरवपूजिता ।
महाकान्ति प्रियानन्दो महाकान्तिस्थिताऽमरा ॥ २५॥

मालाकोटिधरो मालो मुण्डमालाविभूषिता ।
मण्डलज्ञाननिरतो मणिमण्डलवासिनी ॥ २६॥

महाविभूतिक्रोधस्थो मिथ्यादोषसरस्वती ।
मेरुस्थो मेरुनिलय मेनकानुजरूपिणि ॥ २७॥

महाशैलासन मेरुमोहिनी मेघवाहिनी ।
मञ्जुघोषो मञ्जुनाथो मोहमुद्गरधारिणी ॥ २८॥

मेढ्रस्थो मणिपीठस्थो मूलरूपा मनोहरा ।
मङ्गलार्थो महायोगी मत्तमेहसमुद्भवा ॥ २९॥

मतिस्थित मनोमानो मनोमाता महोन्मनी ।
मन्दबुद्धिहरो मृत्युर्मृत्युहन्त्री मनःप्रिया ॥ ३०॥

महाभक्तो महाशक्तो महाशक्तिर्मदातुरा ।
मणिपुरप्रकाशश्च मणिपुरविभेदिनी ॥ ३१॥

मकारकूटनिलयो माना मानमनोहरी ।
माक्षरो मातृकावर्णो मातृकाबीजमालिनी ॥ ३२॥

महातेजा महारश्मिर्मन्युग स्यान् मधुप्रिया ।
मधुमांससमुत्पन्नो मधुमांसविहारिणी ॥ ३३॥

मैथुनानन्दनिरतो मैथुनालापमोहिनी ।
मुरारिप्रेमसंतुष्टो मुरारिकरसेविता ॥ ३४॥

माल्यचन्दनदिग्धाङ्गो मालिनी मन्त्रजीविका ।
मन्त्रजालस्थितो मन्त्री मन्त्रिणांमन्त्रसिद्धिदा ॥ ३५॥

मन्त्रचैतन्यकारी च मन्त्रसिद्धिप्रिया सती ।
महातीर्थप्रियो मेषो महासिंहासनस्थिता ॥ ३६॥

महाक्रोधसमुत्पन्नो महती बुद्धिदायिनी ।
मरणज्ञानरहितो महामरणनाशिनी ॥ ३७॥

मरणोद्भूतहन्ता च महामुद्रान्विता मुदा ।
महामोदकरो मारो मारस्था मारनाशिनी ॥ ३८॥

महाहेतुहरो हर्ता महापुरनिवासिनी ।
महाकौलिकपालश्च महादैत्यनिवारिणी ॥ ३९॥

मार्तण्डकोटिकिरणो मृतिहन्त्री मृतिस्थिता ।
महाशैलोऽमलो मायी महाकालगुणोदया ॥ ४०॥

महाजयो महारुद्रो महारुद्रारुणाकरा ।
मनोवर्णमृजोमाख्यो मुद्रा तरुणरूपिणी ॥ ४१॥

मुण्डमालाधरो मार्यो मार्यपुष्पमृजामनी ।
मङ्गलप्रेमभावस्था महाविद्युत्प्रभाऽचला ॥ ४२॥

मुद्राधारी मतस्थैर्यो मतभेदप्रकारिणी ।
महापुराणवेत्ता च महापौराणिकाऽमृता ॥ ४३॥

मौनविद्यो महाविद्या महाधननिवासिनी ।
मघवा माघमध्यस्था महासैन्या महोरगा ॥ ४४॥

महाफणिधरो मात्रा मातृका मन्त्रवासिनी ।
महाविभूतिदानाढ्या मेरुवाहनवाहना ॥ ४५॥

महाह्लादो महामित्रो महामैत्रेयपूजिता ।
मार्कण्डेयसिद्धिदाता मार्कण्डेयायुषिस्थिता ॥ ४६॥

मार्कण्डेयो मुहुःप्रीतो मातृकामण्डलेश्वरी ।
मानसंस्थो मानदाता मनोधारणतत्परा ॥ ४७॥

मयदानवचित्तस्थो मयदानवचित्रिणी ।
महागुणधरानन्दो महालिङ्गविहारिणी ॥ ४८॥

महेश्वरस्थितो मूलो मूलविद्याकुलोदया ।

मायापो मोहनोन्मादी महागुरुनिवासिनी ॥ ४९॥

महाशुक्लाम्बरधरो मलयागुरुधूपिता ।
मधूपिनी मधूल्लासो माध्वीरससमाश्रया ॥ ५०॥

महागुरुर्महादेहो महोत्साहा महोत्पला ।
मध्यपङ्कजसंस्थाता मध्याम्बुजनिवासिनी ॥ ५१॥

मारीभयहरो मल्लो मल्लग्रहविरोधिनी ।
महामुण्डलयोन्मादी मदघूर्णीतलोचना ॥ ५२॥

महासद्योजातकालो महाकपिलवर्तीनी ।
मेघवाहो महावक्त्रो मनसामणिधारिणी ॥ ५३॥

मरणाश्रयहन्ता च महागुर्वीगणस्थिता ।
महापद्मस्थितो मन्त्रो मन्त्रविद्यानिधीश्वरी ॥ ५४॥

मकरासनसंस्थाता महामृत्युविनाशिनी ।
मोहनो मोहिनीनाथो मत्तनर्तनवासिनी ॥ ५५॥

महाकालकुलोल्लासी महाकामादिनाशिनी ।
मूलपद्मनिवासी च महामूलकुलोदया ॥ ५६॥

मासाख्यो मांसनिलया मङ्गलस्था महागुणा ।
मायाछन्नतरो मीनो मीमांसागुणवादिनी ॥ ५७॥

मीमांसाकारको मायी मार्जारसिद्धिदायिनी ।
मेदिनीवल्लभक्षेमो मेदिनीज्ञानमोदिनी ॥ ५८॥

मौषलीश मृषार्थस्थो मनकल्पितकेशरी ।
मनस श्रीधरो जापो मन्दहाससुशोभिता ॥ ५९॥

मैनाको मेनकापुत्रो मायाछन्ना महाक्रिया ।
महाक्रिया च लोमाण्डो मण्डलासनशोभिता ॥ ६०॥

मायाधारणकर्ता च महाद्वेषविनाशिनी ।
मुक्तकेशी मुक्तदेहो मुक्तिदा मुक्तिमानिनी ॥ ६१॥

मुक्ताहारधरो मुक्तो मुक्तिमार्गप्रकाशिनी ।
महामुक्तिक्रियाच्छन्नो महोच्चगिरिनन्दिनी ॥ ६२॥

मूषलाद्यस्त्रहन्ता च महागौरीमनःक्रिया ।
महाधनी महामानी मनोमत्ता मनोलया ॥ ६३॥

महारणगत सान्तो महावीणाविनोदिनी ।
महाशत्रुनिहन्ता च महास्त्रजालमालिनी ॥ ६४॥

शिवो रुद्रो वलीशानी कितवामोदवर्धीनी ।
चन्द्रचूडाधरो वेदो मदोन्मत्ता महोज्ज्वला ॥ ६५॥

विगलत्कोटिचन्द्राभो विधुकोटिसमोदया ।
अग्निज्वालाधरो वीरो ज्वालामालासहस्रधा ॥ ६६॥

भर्गप्रियकरो धर्मो महाधार्मीकतत्परा ।
धर्मध्वजो धर्मकर्ता धर्मगुप्ति प्रसृत्त्वरी ॥ ६७॥

महाविद्रुमपूरस्थो विद्रुमाभायुतप्रभा ।
पुष्पमालाधरो मान्यो शत्रूणां कुलनाशिनी ॥ ६८॥

कोजागरो विसर्गस्थो बीजमालाविभूषिता ।
बीजचन्द्रो बीजपूरो बीजाभा विघ्ननाशिनी ॥ ६९॥

विशिष्टो विधिमोक्षस्थो वेदाङ्गपरिपूरिणी ।
किरातिनीपति श्रीमान् विज्ञाविज्ञजनप्रिया ॥ ७०॥

वर्धस्थो वर्धसम्पन्नो वर्णमालाविभूषिता ।
महाद्रुमगत शूरो विलसत्कोटिचन्द्रभा ॥ ७१॥

महाकुमारनिलयो महाकामकुमारिका ।
कामजालक्रियानाथो विकला कमलासना ॥ ७२॥

खण्डबुद्धिहरो भावो भवतीति दुरासना ।
असंख्यको रूपसंख्यो नामसंख्यादिपूरणी ॥ ७३॥

सद्मनाद्यमना कोषकिङ्किणीजालमालिनी ।
चन्द्रायुतमुखाम्भोजो विभायुतसमानना ॥ ७४॥

कालबुद्धिहरो बालो भगवत्यम्बिकाऽण्डजा ।
मुण्डहस्तश्चातुराद्यः विवादरहिताऽवृता ॥ ७५॥

पञ्चमाचारकुशलो महापञ्चमलालसा ।
विकारशून्यो दुर्धर्षो द्विपदा मानुषक्रिया ॥ ७६॥

मयदानवकर्मस्थो विधातृकर्मबोधिनी ।
कलिकालक्रियारूढ वायवीघर्घरध्वनि ॥ ७७॥

सर्वसञ्चारकर्ता च सर्वसञ्चारकर्त्रीका ।
मन्दमन्दगतिप्रेमा मन्दमन्दगतिस्थिता ॥ ७८॥

साट्टहासो विधुकला चाघोराघोरयातना ।
महानरकहर्ता च नरकादिविपाकहा ॥ ७९॥

पञ्चरश्मिसमुद्भूतो नगादिबलघातिनी ।
गरुडासनसम्पूज्यो गरुडप्रेमवर्धीनी ॥ ८०॥

अश्वत्थवृक्षनिलयो वटवृक्षतलस्थिता ।
चिराङ्गो प्रथमाबुद्धि प्रपञ्चसारसङ्गति ॥ ८१॥

स्थितिकर्ता स्थितिच्छाया विमदा छत्रधारिणी ।
दाडिमाभासकुसुमो दाडिमोद्भवपुष्पिका ॥ ८२॥

द्राढ्यो द्रवीभरतिका रतिकालापवर्धीनी ।
रत्नगर्भो रत्नमाला रत्नेश्वर इवागति ॥ ८३॥

प्रसिद्धः पावनी पुच्छा पुच्छसुस्थ परापरा ।
खेचरी खेचर स्वस्थो महाखड्गधरा जया ॥ ८४॥

किशोरभावखेलस्थो विखनादिप्रकारिका ।
महाशब्दप्रकाशश्च महाशब्दप्रकाशिका ॥ ८५॥

चारुहासो विपधन्ता शत्रुमित्रगणस्थिता ।
वज्रदण्डधरो व्याघ्रो वियत्खेलनखञ्जना ॥ ८६॥

गदाधर शीलधारी शशिकर्पूरगाऽबला ।

वसनासनकारी च वसनावसनप्रिया ॥ ८७॥

महाविद्याधरो गुप्तो विशिष्टगोपनक्रिया ।
गुप्तगीतागायनस्थो गुप्तशास्त्रगलप्रदा ॥ ८८॥

योगविद्यापुराणश्च यागविद्या विभाकला ।
एककालो द्विकालश्चात्र कालफलाम्बुजा ॥ ८९॥

अष्टादशभुजो रौद्री भुजगा विघ्ननाशिनी ।
विद्यागोपनकारी च विद्यासिद्धिप्रदायिनी ॥ ९०॥

विजयानन्दगो मन्दो महाकालमहेश्वरी ।
भूतिदानरतो मार्गो महद्गीताप्रकाशिनी ॥ ९१॥

केशाद्यावेशसन्तानो मङ्गलाभा कुलान्तरा ।
द्विभुजो वेदबाहुश्च षड्भुजा कामचारिणी ॥ ९२॥

चन्द्रकान्तमाल्यधरो लोकातिलोकरागिणी ।
त्रिभङ्गदेहनिकरो विभाङ्गस्था विनोदिनी ॥ ९३॥

त्रिकूटस्थस्त्रिभावस्थस्त्रिशरीरा त्रिकालजा ।
एकवक्त्रो द्विवक्त्रश्च वक्त्रशून्या शिशुप्रिया ॥ ९४॥

श्री विद्यामन्त्रजालस्थो विज्ञानी कुशलेश्वरी ।
घटासरगतो गौरा गौरवी गौरिकाऽचला ॥ ९५॥

गुरुज्ञानगतो गन्धो गन्धभोग्या गिरिध्वजा ।
छायामण्डलमध्यस्थो विकटा पुष्करानना ॥ ९६॥

कामाख्यो निरहङ्कार कामरूपनृपाङ्गजा ।
सुलभो दुर्लभो दुःखी सूक्ष्मातिसूक्ष्मरूपिणी ॥ ९७॥

बीजजापपशो क्रूरो विमोहगुणनाशिनी ।
अर्धरो निपुणोल्लाशो विभुरूपा सरस्वती ॥ ९८॥

अनन्तघोषनिलयो विहङ्गगणगामिनी ।
अच्युतेश प्रकाण्डस्थ प्रचण्डफालवाहिनी ॥ ९९॥

अभ्रान्तो भ्रान्तिरहिता श्रान्तो यान्ति प्रतिष्ठिता ।
अव्यर्थो व्यर्थवाक्यस्थो विशङ्काशङ्कयान्विता ॥ १००॥

यमुनापतिप पीनो महाकालवसावहा ।
जम्बूद्वीपेश्वर पार पारावारकृतासनी ॥ १०१॥

वज्रदण्डधर शान्तो मिथ्यागतिरतीन्द्रिया ।
अनन्तशयनो न्यूनः परमाह्लादवर्धीनी ॥ १०२॥

शिष्टाश्रणिलयो व्याख्यो वसन्तकालसुप्रिया ।
विरजान्दोलितो भिन्नो विशुद्धगुणमण्डिता ॥ १०३॥

अञ्जनेशः खञ्जनेश पललासवभक्षिणी ।
अङ्गभाषाकृतिस्नाता सुधारसफलातुरा ॥ १०४॥

फलबीजधरो दौर्गो द्वारपालनपल्लवा ।
पिप्पलादः कारणश्च विख्यातिरतिवल्लभा ॥ १०५॥

संहारविग्रहो विप्रो विषण्णा कामरूपिणी ।
अवलापो नापनापो विक्लृप्ता कंसनाशिनी ॥ १०६॥

हठात्कारेणतो चामो नाचामो विनयक्रिया ।
सर्व सर्वसुखाच्छन्नो जिताजितगुणोदया ॥ १०७॥

भास्वत्किरीटो राङ्कारी वरुणेशीतलान्तरा ।
अमूल्यरत्नदानाढ्यो दिवारात्रिस्त्रिखण्डजा ॥ १०८॥

मारबीजमहामानो हरबीजादिसंस्थिता ।
अनन्तवासुकीशानो लाकिनी काकिनी द्विधा ॥ १०९॥

कोटिध्वजो बृहद्गर्गश्चामुण्डा रणचण्डिका ।
उमेशो रत्नमालेशी विकुम्भगणपूजिता ॥ ११०॥

निकुम्भपूजित कृष्णो विष्णुपत्नी सुधात्मिका ।
अल्पकालहरः कुन्तो महाकुन्तास्त्रधारिणी ॥ १११॥

ब्रह्मास्त्रधारक क्षिप्तो वनमालाविभूषिता ।
एकाक्षर द्वयक्षरश्च षोडशाक्षरसम्भवा ॥ ११२॥

अतिगम्भीरवातस्थो महागम्भीरवाद्यगा ।
त्रिविधात्मा त्रिदेशात्मा तृतीयात्राणकारिणी ॥ ११३॥

कियत्कालचलानन्दो विहङ्गगमनासना ।
गीर्वाण बाणहन्ता च बाणहस्ता विधूच्छला ॥ ११४॥

बिन्दुधर्मोज्ज्वलोदारो वियज्ज्वलनकारिणी ।
विवासा व्यासपूज्यश्च नवदेशीप्रधानिका ॥ ११५॥

विलोलवदनो वामो विरोमा मोदकारिणी ।
हिरण्यहारभूषाङ्गः कलिङ्गनन्दिनीशगा ॥ ११६॥

अनन्यक्षीणवक्षश्च क्षितिक्षोभविनाशिका ।
क्षणक्षेत्रप्रसादाङ्गो वशिष्ठादिऋषीश्वरी ॥ ११७॥

रेवातीरनिवासी च गङ्गातीरनिवासिनी ।
चाङ्गेशः पुष्करेशश्च व्यासभाषाविशेषिका ॥ ११८॥

अमलानाथसंज्ञश्च रामेश्वरसुपूजिता ।
रमानाथ प्रभु प्राप्ति कीर्तीदुर्गाभिधानिका ॥ ११९॥

लम्बोदर प्रेमकालो लम्बोदरकुलप्रिया ।
स्वर्गदेहो ध्यानमानो लोचनायतधारिणी ॥ १२०॥

अव्यर्थवचनप्रक्ष्यो विद्यावागीश्वरप्रिया ।
अब्दमानस्मृतिप्राण कलिङ्गनगरेश्वरी ॥ १२१॥

अतिगुह्यतरज्ञानी गुप्तचन्द्रात्मिकाऽव्यया ।
मणिनागगतो गन्ता वागीशानी बलप्रदा ॥ १२२॥

कुलासनगतो नाशो विनाशा नाशसुप्रिया ।
विनाशमूलः कूलस्थः संहारकुलकेश्वरी ॥ १२३॥

त्रिवाक्यगुणविप्रेन्द्रो महदाश्चर्यचित्रिणी ।
आशुतोषगुणाच्छन्न मदविह्वलमण्डला ॥ १२४॥

विरूपाक्षी लेलिहश्च महामुद्राप्रकाशिनी ।

अष्टादशाक्षरो रुद्रो मकरन्दसुबिन्दुगा ॥ १२५॥

छत्रचामरधारी च छत्रदात्री त्रिपौण्ड्रजा ।
इन्द्रात्मको विधाता च धनदा नादकारिणी ॥ १२६॥

कुण्डलीपरमानन्दो मधुपुष्पसमुद्भवा ।
बिल्ववृक्षस्थितो रुद्रो नयनाम्बुजवासिनी ॥ १२७॥

हिरण्यगर्भ कौमारो विरूपाक्षा ऋतुप्रिया ।
श्रीवृक्षनिलयश्यामो महाकुलतरूद्भवा ॥ १२८॥

कुलवृक्षस्थितो विद्वान् हिरण्यरजतप्रिया ।
कुलपः प्राणप प्राणा पञ्चचूडधराधरा ॥ १२९॥

उषती वेदिकानाथो नर्मधर्मविवेचिका ।
शीतलाप्त शीतहीनो मनःस्थैर्यकरी क्षया ॥ १३०॥

कुक्षिस्थ क्षणभङ्गस्थो गिरिपीठनिवासिनी ।
अर्धकायः प्रसन्नात्मा प्रसन्नवनवासिनी ॥ १३१॥

प्रतिष्ठेश प्राणधर्मा ज्योतीरूपा ऋतुप्रिया ।
धर्मध्वजपताकेशो बलाका रसवर्द्धीनी ॥ १३२॥

मेरुशृङ्गगतो धूर्तो धूर्तमत्ता खलस्पृहा ।
सेवासिद्धिप्रदोऽनन्तोऽनन्तकार्यविभेदिका ॥ १३३॥

भाविनामत्त्वजानज्ञो विराटपीठवासिनी ।
विच्छेदच्छेदभेदश्च छलन्शास्त्रप्रकाशिका ॥ १३४॥

चारुकर्म्या संस्कृतश्च तप्तहाटकरूपिणी ।
परानन्दरसज्ञानी रससन्तानमन्त्रिणी ॥ १३५॥

प्रतीक्ष सूक्ष्मशब्दश्च प्रसङ्गसङ्गतिप्रिया ।
अमायी सागरोद्भूतो वन्ध्यादोषविवर्जीता ॥ १३६॥

जितधर्मो ज्वलच्छत्री व्यापिका फलवाहना ।
व्याघ्रचर्माम्बरो योगी महापीना वरप्रदा ॥ १३७॥

वरदाता सारदाता ज्ञानदा वरवाहिनी ।
चारुकेशधरो मापो विशाला गुणदाऽम्बरा ॥ १३८॥

ताडङ्कमालानिर्मालधरस्ताडङ्कमोहिनी ।
पञ्चालदेश सन्भूतो विशुद्धस्वरवल्लभा ॥ १३९॥

किरातपूजितो व्याधो मनुचिन्तापरायणा ।
शिव वाक्यरतो वामो भृगुरामकुलेश्वरी ॥ १४०॥

स्वयम्भू कुसुमाच्छन्नो विधिविद्याप्रकाशिनी ।
प्रभाकरतनूद्भूतो विशल्यकरणीश्वरी ॥ १४१॥

उषतीश्वर सम्पर्की योगविज्ञानवासिनी ।
उत्तमो मध्यमो व्याख्यो वाच्यावाच्यवराङ्गना ॥ १४२॥

आम्बीजवादरोषाढ्या मन्दरोदरकारिणी ।
कृष्णसिद्धान्तसंस्थानो युद्धसाधनचर्चीका ॥ १४३॥

मथुरासुन्दरीनाथो मथुरापीठवासिनी ।
पलायनविशून्यश्च प्रकृतिप्रत्ययस्थिता ॥ १४४॥

प्रकृतिप्राणनिलयो विकृतिज्ञाननाशिनी ।
सर्वशास्त्रविभेदश्च मत्तसिंहासनासना ॥ १४५॥

इतिहासप्रियो धीरो विमलाऽमलरूपिणी ।
मणिसिंहासनस्थश्च मणिपूरजयोदया ॥ १४६॥

भद्रकालीजपानन्दो भद्राभद्रप्रकाशिनी ।
श्रीभद्रो भद्रनाथश्च भयभङ्गविहिंसिनी ॥ १४७॥

आत्मारामो विधेयात्मा शूलपाणिप्रियाऽन्तरा ।
अतिविद्यादृढाभ्यासो विशेषवित्तदायिनी ॥ १४८॥

अजराऽमरकान्तिश्च कान्तिकोटिधरा शुभा ।
पशुपाल पद्मसंस्थ श्रीशपाशुपताऽस्त्रदा ॥ १४९॥

सर्वशास्त्रधरो दृप्तो ज्ञानिनी ज्ञानवर्धीनी ।
द्वितीयानाथ ईशार्द्धो बादरायणमोहिनी ॥ १५०॥

शवमांसाशनो भीमो भीमनेत्रा भयानका ।
शिवज्ञानक्रमो दक्ष क्रियायोगपरायणा ॥ १५१॥

दानस्थो दानसम्पन्नो दन्तुरा पार्वतीपरा ।
प्रियानन्दो दिवाकर्ता निशानिषादघातिनी ॥ १५२॥

अष्टहस्तो विलोलाक्षो मनःस्थापनकारिणी ।
मृदुपुत्रो मृदुच्छत्रो विभाऽङ्गपुण्यनन्दिनी ॥ १५३॥

अन्तरिक्षगतो मूलो मूलपुत्रप्रकाशिनी ।
अभीतिदाननिरतो विधुमालामनोहरी ॥ १५४॥

चतुरास्रजाह्नवीशो गिरिकन्या कुतूहली ।
शिशुपालरिपुप्राणो विदेशपदरक्षिणी ॥ १५५॥

विलक्षणो विधिज्ञाता मानहन्त्री त्रिविक्रमा ।
त्रिकोणाननयोगीशो निम्ननाभिर्नगेश्वरी ॥ १५६॥

नवीन गुणसम्पन्नो नवकन्याकुलाचला ।
त्रिविधेशो विशङ्केतो विज्वरा ज्वरदायिनी ॥ १५७॥

अतिधामीकपुत्रश्च चारुसिंहासनस्थिता ।
स्थापकोत्तमवर्गाणां सतां सिद्धिप्रकाशिनी ॥ १५८॥

सिद्धप्रियो विशालाक्षो ध्वंसकर्त्री निरञ्जना ।
शक्तीशो विकलेशश्च क्रतुकर्मफलोदया ॥ १५९॥

विफलेशो वियद्गामी ललिता बुद्धिवाहना ।
मलयाद्रितप क्षेम क्षयकर्त्री रजोगुणा ॥ १६०॥

द्विरुण्डको द्वारपालो बलेवीघ्नविनाशिनी ।
मायापद्मगतो मानो मारीविद्याविनाशिनी ॥ १६१॥

हिङ्गुलाजस्थित सिद्धो विदुषां वादसारिणी ।
श्रीपतीश श्रीकरेश श्रीविद्या भुवनेश्वरी ॥ १६२॥

मतिप्रथमजो धन्यो मिथिलानाथपुत्रिका ।

रामचन्द्रप्रिय प्राप्तो रघुनाथकुलेश्वरी ॥ १६३॥

कूर्मः कूर्मगतो वीरो वसावर्गा गिरीश्वरी ।
राजराजेश्वरीबालो रतिपीठगुणान्तरा ॥ १६४॥

कामरूपधरोल्लासो विदग्धा कामरूपिणी ।
अतिथीश सर्वभर्ता नानालङ्कारशोभिता ॥ १६५॥

नानालङ्कारभूषाङ्गो नरमालाविभूषिता ।
जगन्नाथो जगद्व्यापी जगतामिष्टसिद्धिदा ॥ १६६॥

जगत्कामो जगद्व्यापी जयन्ती जयदायिनी ।
जयकारी जीवकारी जयदा जीवनी जया ॥ १६७॥

जयो गणेश श्रीदाता महापीठनिवासिनी ।
विषम सामवेदस्थो यजुर्वेदांशयोगया ॥ १६८॥

त्रिकालगुणगम्भीरो द्वाविंशतिकराम्बुजा ।
सहस्रबाहु सारस्थो भागगा भवभाविनी ॥ १६९॥

भवनादिकरो मार्गो विनीता नयनाम्बुजा ।
सर्वत्राकर्षकोऽखण्ड सर्वज्ञानाभिकर्षीणी ॥ १७०॥

जिताशयो जितविप्रः कलङ्कगुणवर्जीता ।
निराधारो निरालम्बो विषया ज्ञानवर्जीता ॥ १७१॥

अतिविस्तारवदनो विवादखलनाशिनी ।
भार्यानाथः क्षोभनाशो रिपूणां कुलपूजिता ॥ १७२॥

आशवो भूरिवर्गाणां चारुकुन्तलमण्डिता ।
अतिबुद्धिधरो सूक्ष्मो रजनीध्वान्तनाशिनी ॥ १७३॥

ज्योत्स्नाजालकरो योगी वियोगशायिनी युगा ।
युगगामी योगगामी जयदा लाकिनी शिवा ॥ १७४॥

संज्ञाबुद्धिकरो भावो भवभीतिविमोहिनी ।
सुन्दर सुन्दरानन्दो रतिकारतिसुन्दरी ॥ १७५॥

रतिज्ञानी रतिसुखो रतिनाथप्रकाशिनी ।
बुद्धरूपी बोधमात्रो वैरोधो द्वैतवर्जीता ॥ १७६॥

भूरिभावहरानन्दो भूरिसन्तानदायिनी ।
यज्ञसाधनकर्ता च सुयज्ञ पञ्चमोचना ॥ १७७॥

कोटिकोटिचन्द्रतेजः कोटिकोटिरुचिच्छटा ।
कोटिकोटिचञ्चलाभो द्विकोट्ययुतचञ्चला ॥ १७८॥

कोटिसूर्याच्छन्नदेह कोटिकोटिरविप्रभा ।
कोटिचन्द्रकान्तमणि कोटीन्दुकान्तनिर्मला ॥ १७९॥

शतकोटिविधुमणि शतकोटीन्दुकान्तगा ।
विलसत्कोटिकालाग्नि कोटिकालानलोपमा ॥ १८०॥

कोटिवह्निगतो वह्नि वह्निजाया द्विगोद्भवा ।
महातेजो वह्निवारिः कालाग्निहारधारिणी ॥ १८१॥

कालाग्निरुद्रो भगवान् कालाग्निरुद्ररूपिणी ।
कालात्मा कलिकालात्मा कलिका कुललाकिनी ॥ १८२॥

मृत्युजितो मृत्युतेजा मृत्युञ्जयमनुप्रिया ।
महामृत्युहरो मृत्युऽपमृत्युविनाशिनी ॥ १८३॥

जयो जयेशो जयदो जयदा जयवर्धीनी ।
जयकरो जगद्धर्मो जगज्जीवनरक्षिणी ॥ १८४॥

सर्वजित् सर्वरूपी च सर्वदा सर्वभाविनी ।
इत्येतत् कथितं नाथ महाविद्याभिधानकम् ॥ १८५॥

शब्दब्रह्ममयं साक्षात् कल्पवृक्षस्वरूपकम् ।
अष्टोत्तरसहस्राख्यं शतसंख्यासमाकुलम् ॥ १८६॥

त्रैलोक्यमङ्गलक्षेत्रं सिद्धविद्याफलप्रदम् ।
सकलं निष्कलं साक्षात् कल्पद्रुमकलान्वितम् ॥ १८७॥

योगिनामात्मविज्ञानमात्मज्ञानकरं परम् ।
यः पठेद् भावसम्पूर्णो मिथ्याधर्मविवर्जीतः ॥ १८८॥

रुद्रपीठे स्वयं भूत्वा महायोगी भवेद्ध्रुवम् ।
अकस्मात्सिद्धिमाप्नोति चाधमाम्माल्यदायिनीम् ॥ १८९॥

राजलक्ष्मीधनैश्वर्यमतिधैर्य हयादिकम् ।
कुञ्जरं सुन्दरं वीरं पुत्रं राज्यं सुखं जयम् ॥ १९०॥

राजराजेश्वरत्वं च दिव्यवाहनमेव च ।
अक्लेशपञ्चमासिद्धिं ततः प्राप्नोति मध्यमाम् ॥ १९१॥

अत्यन्तदुःखहननं गुरुत्वं लोकमण्डले ।
देवानां भक्तिसंख्याञ्च दिव्यभावं सदा सुखम् ॥ १९२॥

आयुर्वृद्धिं लोकवश्यं पूर्णकोशं हि गोधनम् ।
देवानां राज्यभवनं प्रत्यक्षे स्वप्नकालके ॥ १९३॥

दीर्घदृष्टिभयत्यागं चाल्पकार्यविवर्जीतम् ।
सदा धर्मप्रियत्वं च धर्मज्ञानं महागुणम् ॥ १९४॥

विवेकाङ्कुरमानन्दं श्रीवाणीसुकृपान्वितम् ।
तत उत्तमयोगस्थां सिद्धिं प्राप्नोति साधकः ॥ १९५॥

अनन्तगुणसंस्थानं मायार्थभूतिवर्जनम् ।
एकान्तस्थानवसतिं योगशास्त्रनियोजनम् ॥ १९६॥

सर्वाकाङ्क्षाविशून्यत्वं दैवतैकान्तसेवनम् ।
खेचरत्वं सर्वगतिं भावसिद्धिं सुरप्रियम् ॥ १९७॥

सदा रौद्रक्रियायोगं विभूत्यष्टाङ्गसिद्धिदम् ।
दृढज्ञानं सर्वशास्त्रकारित्वं रससागरम् ॥ १९८॥

एकभावं द्वैतशून्यं महापदनियोजनम् ।
महागुणवतीविद्यापतित्वं शान्तिमेव च ॥ १९९॥

प्राप्नोति साधकश्रेष्ठो यः पठेद् भावनिश्चलः ।
त्रिकालमेककालं वा द्विकालं वा पठेत् सुधीः ॥ २००॥

शतमष्टोत्तरं चास्य पुरश्चर्याविधिः स्मृतः ।

पुरश्चरणमाकृत्य पठित्वा च पुनः पुनः ॥ २०१॥

अष्टैश्वर्ययुतो भूत्वा मनोगतिमवाप्नुयात् ।
सर्वत्र कुशलं व्यासं यः पठेन्नियतः शुचिः ॥ २०२॥

षट्चक्रमणिपीठञ्च भित्त्वाऽनाहतगो भवेत् ।
अनाहतं ततो भित्त्वा विशुद्धसङ्गमो भवेत् ॥ २०३॥

विशुद्धपद्मं भित्त्वा च शीर्षे द्विदलगो भवेत् ।
द्विदलादिमहापद्मं भित्त्वैतत् स्तोत्रपाठतः ॥ २०४॥

चतुर्वर्गां क्रियां कृत्वा चान्ते निर्वाणमोक्षभाक् ।
योगिनां योगसिद्ध्यर्थे सर्वभूतदयोदयम् ॥ २०५॥

निर्वाणमोक्षसिद्ध्यर्थे कथितं परमेश्वर ।
एतत्स्तवनपाठेन किं न सिद्ध्यति भूतले ॥ २०६॥

कुलं कुलक्रमेणैव साधयेद् योगसाधनम् ।
योगान्ते योगमध्ये च योगाद्ये प्रपठेत् स्तवम् ॥ २०७॥

कृत्तिकारोहिणीयोगयात्रायां मिथुने तथा ।
श्रवणायां मेषगणे कुजे चेन्दुसमाकुले ॥ २०८॥

शनिवारे च सङ्क्रान्त्यां कुजवारे पुनः पुनः ।
सन्ध्याकाले लिखेत् स्तोत्रं ध्यानधारणयोगिराट् ॥ २०९॥

भूर्जपत्रे लिखित्वा च कण्ठे शीर्षे प्रधारयेत् ।
अथवा रात्रियोगे च कुलचक्रे लिखेत् सुधीः ॥ २१०॥

सर्वत्र कुलयोगेन पठन् सिद्धिमवाप्नुयात् ।
एतन्नाम्ना प्रजुहुयात् कालिकाकृतिमान् भवेत् ॥ २११॥

तद्दशांशक्रमेणैव हुत्वा योगीह सर्वदा ।
मणिपूरे दृढो भूत्वा रुद्रशक्तिकृपां लभेत् ॥ २१२॥

॥ इति श्रीरुद्रयामले उत्तरतन्त्रे
लाकिनीशाष्टोत्तरशतसहस्रनामस्तोत्रं सम्पूर्णम् ॥